संस्कृत-प्रचार पुस्तकमाला सं० ३८

# भारत-राष्ट्रगीतम्

भारत राष्ट्रसम्बन्धी वेदमन्त्रों, संस्कृत कविताओं;
संस्कृतगीतों तथा संस्कृतपदबहुल
अन्यभाषाओं के गीतों का
संकलन




सार्वभौम-संस्कृत प्रचार कार्यालय
वाराणसी

# आवश्यक निवेदन

## १—संस्कृत के विद्यार्थियों से

इस पुस्तिका में कुछ राष्ट्रीय भावना से भरे मन्त्र, श्लोक एवं संस्कृत के गीत प्रकाशित किये जा रहे हैं। संस्कृत के समस्त विद्यार्थियों से विनीत प्रार्थना है कि वे इनका समीचीन रूप से अभ्यास कर इन्हें ओज-भरे मनोहर स्वर में सर्वत्र राष्ट्रीय समारोहों में सुना-सुना कर जन-जन में राष्ट्र के प्रति प्रगाढ़ भक्ति एवं अपने कर्तव्य-पालन के प्रति अटूट निष्ठा के भाव जागृत करें तथा संस्कृत-भारती की स्वरलहरी से समस्त भारतीय गगन-मण्डल एवं दिगन्तराल को पावन एवं प्रतिध्वनित कर दें।

इन गीतों तथा इस प्रकार के अन्य गीतों के अभ्यास के साथ भारत के राष्ट्रगीत "जन-गण" तथा वन्दे मातरम् इन दोनों गीतों के भी उत्कृष्ट रूप से गाने का अभ्यास संस्कृत के प्रत्येक विद्यार्थी को अनिवार्य रूप से हो जाना चाहिये। इसीलिये इस पुस्तक में ये दोनों गीत भी प्रकाशित कर दिये गये हैं।

## २—संस्कृत के अध्यापकों से

समस्त विद्यालयों के अध्यापकों तथा विशेषकर प्रधानाचार्यों से विशेष अभ्यर्थना है कि वे अपने छात्रों में से २-४ को तो अवश्य ही योग्य बनाकर तैयार रखें कि किसी भी सभा-सम्मेलन में कुछ भावना के श्लोक एवं संस्कृत के गीत आकर्षक रूप में गाकर अपना तथा अपने विद्यालय का भी नाम यशस्वी बना सकें।

आशा है कि संस्कृत के माननीय अध्यापकगण एवं छात्रगण इस ओर ध्यान देकर हमें अवश्य अनुगृहीत करेंगे।

विनीत

—सम्पादक

# भारत-राष्ट्रगीतम्

## मातृभूमि-सूक्तम्

सत्यं वृहद् ऋतमुग्रं दीक्षा
तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति ।
सा नो भूतस्य भव्यस्य पत्नी
उरुं लोकं पृथिवी नः करोतु ॥

यस्यां पूर्वे पूर्वजना विचक्रिरे
यस्यां देवा असुरानभ्यवर्तयन् ।
गवामश्वानां वयसश्च विष्ठा
भगं वर्चः पृथिवी नो दधातु ॥

विश्वम्भरा वसुधानी प्रतिष्ठा
हिरण्यवक्षा जगतो निवेशनी ।
वैश्वानरं विभ्रती भूमिरग्निम्
इन्द्र ऋषभा द्रविणे नो दधातु ॥

जनं विभ्रती वहुधा विवाचसं
नानाधर्माणं पृथिवी यथौकसम् ।
सहस्रं धारा द्रविणस्य मे दुहां
ध्रुवेव धेनुरनपस्फुरन्ती ॥

निधिं विभ्रती बहुधा गुहा वसु
मणिं हिरण्यं पृथिवी ददातु मे ।
वसूनि नो वसुदा रासमाना
देवी दधातु सुमनस्यमाना ॥

उपस्थास्ते अनमीवा अयक्ष्मा
अस्मभ्यं सन्तु पृथिवि प्रसूताः ।
दीर्घं न आयुः प्रतिवुध्यमाना
वयं तुभ्यं बलिहृतः स्याम ॥

भूमे मार्तर्निधेहि मा
भद्रया सुप्रतिष्ठितम् ।
संविदाना दिवा कवे
श्रियं मा धेहि भूत्याम् ॥

—अथर्ववेद का० १२ सू० १, मं० १,३,६, ४५, ४५, ६२, ६३ ।

## राष्ट्र-सूक्तम्

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ।

—शुक्लयजुर्वेदः २२, २२

## भारत-प्रशस्तिः

गायन्ति देवाः किल गीतकानि
धन्यास्तु ते भारतभूमिभागे ।
स्वर्गाऽपवर्गाऽस्पद - हेतुभूते
भवन्ति भूयः पुरुषाः सुरत्वात् ॥

—विष्णुपुराणम् ।
११।३।२४

# भारत-गौरवम्

( स्रग्धरा )

आलोलोल्लोलमाला-कलकलकलिताम्भोधिकूलाल्ललामाद्
यावन्नीहारभूमीधर - धवलशिला - लग्न - भू संविभागान् ।
सीमान्तादा च वङ्गोपसरिदधिपतिं यावदस्त्येष सस्यैः
पत्रश्यामैर्द्रुमाग्रैर्वलयितवसुधो भारतं नाम देशः ॥

वङ्गैः सङ्गीतकीर्तिः कलितकलकलश्चोत्कलैरान्ध्रबन्धु-
र्मद्रैरुन्निद्रमुद्रो जवजनितजयोद्गुर्जरः सिन्धुविन्दुः ।
पञ्चापैरञ्चितश्रीर्मधुमधुरधुरो मध्ययुक्तैर्विहारै -
रार्यावर्ताभिधानो जयति जनपदो मानिनां जन्मभूमिः ॥

देवैराप्यायितश्रीरपि सुरझरिणी - निर्झराम्भः - पुनीतो,
नीतः शिक्षां वृहत्याः पतिभिरनुदिनं कीर्तितो लेखवृक्षैः ।
मन्दारैः पारिजातादिभिरथ सहारैः पुण्यभोग्यः सुधाच्छो,
गन्धर्वैर्गीयमानो विलसति सकलो भारतस्वर्गलोकः ॥

गुञ्जद्-भृङ्गालि-गीतैः श्रुतिसुखमधुरैः कूजदालोहिताक्षै—
श्चूतास्वादातिरिक्तस्वरमुखर-पिकैर्माद्यदामोदवाहैः ।
पुष्पाणां पावमानैः प्रकृति-वरबधू-नूतनाक्रीडमुग्धं
दिग्धं शोभाभिरामं कुशलकृतिकलोल्लासितं भारतं नः ॥

चारित्र्याणां निधानं मनुजतनुभृतां संविधानं शुचीनां
मर्यादानां निधानं विमलमतिमतां योगिनां सन्निधानम् ।

आधानं दिव्यभासां प्रकृतिविलसितागारमेकं प्रधानं
राष्ट्रं न्यायावधानं प्रतिपदमयते भारतोच्चाभिधानम् ॥
विश्वेशः सर्वशक्तिर्गिरिवरतनया-साहचर्यार्चितश्रीः
सान्द्रानन्दामृताम्भोनिधिरमरसरिद्वीचिवाचालमौलिः ।
स्वातन्त्र्योल्लासलोलां विलसितविभवां सर्वशोभाभिरामां
भव्यां भव्यैकभावां भरतभुवमिमां सर्वदा संबिभर्तु ॥

—कवितार्किकचक्रवर्तिश्रीमहादेवशास्त्रिणाम्,
वाराणसेयानाम् ।

हिमवता मुकुटेन विराजिता
द्विगुण-षोडशकोटि-सुतान्विता ।
स्मित - पराजित - पूर्णसुधाकरा
जयति भारतवर्ष-वसुन्धरा ॥

—श्रीविन्ध्येश्वरीप्रसादशास्त्रिणाम्

हिमनग - भूषित - भालां
सुरधुनि - जल - धौत - जानपदजालाम् ।
प्रकृति - विभूति - विशालां
वन्दे त्वां त्रिदशकोटिजनपालाम् ॥

—कविवर श्री श्रीधरपाठकानाम्

आहिमालय - कुमारिका - स्थलं
पूर्व - पश्चिम - समुद्र - मध्यतः ।
विस्तृतामिह नमामि भारतीं
जन्मभूमिमखिलार्थदां च नः ॥

—वी० आर० लक्ष्मी अम्माल देव्याः

# मातृभूमि-वन्दना

मातृभूमे नमो मातृभूमे नमो ।
मातृभूमे नमो मातृभूमे नमः ॥

अग्रतस्ते नमः पृष्ठतस्ते नमः,
ऊर्ध्वतस्ते नमश्चाऽप्यधस्ते नमः,

वामतस्ते नमो दक्षिणे ते नमो ।
मातृभूमे नमो मातृभूमे नमः ॥

ते गिरिभ्यो नमस्ते नदीभ्यो नमः,
ते वनेभ्यो नमो जनपदेभ्यो नमः,

ते कणेभ्यो नमस्ते अणुभ्यो नमो ।
मातृभूमे नमो मातृभूमे नमः ॥

प्राणदे त्राणदे देवि शक्तिप्रदे,
ऋद्धिदे सिद्धिदे भुक्ति-मुक्तिप्रदे,

सर्वदे ! सर्वदा देवि ! तुभ्यं नमो ।
मातृभूमे नमो मातृभूमे नमः ।

—सम्पादकस्य



# जय जय भारतमातः

रोम - रोम - रत - राष्ट्र - तरङ्गे
अङ्गे वङ्गे कलित - कलिङ्गे
नहि नहि, सकल - भरतभू - रंगे
जनयतु 'झन-झन-झन-झन् - घोषं तव करवाल-निपातः ।
वृद्धे, प्रौढे, तरुणे, बाले
वक्षसि, वदने, बाहौ, भाले
सकले देशे, सकले काले
वर्षतु भृशं क्रान्ति-जल-धारा विप्लव-जलद-घटातः ।
विकसतु ममता जने - जने ते
वसतु वसन्तो वने - वने ते
विलसतु विद्युद् घने - घने ते
अपि च, विपक्षि - पक्ष - पटले जायेत हिमानी-पातः ।
प्रतिजनमस्तु रुची रिपु - कदने
जयतु जयस्ते वदने - वदने
क्रीडतु ते श्रीः सदने - सदने
चत्वारिंशत्कोटिशिरोभिः प्रभवतु ते प्रणिपातः ।

—स्वर्गीय कविवर श्री श्रीशदत्तशास्त्रिणाम्
आजमगढ़वास्तव्यानाम् ।

# भारत - भूप्रशस्तिः

१

जय भारतभूमि भासि विश्वभुवन-वन्दिता
मुहुरमराः सन्ति सुमुखि तव वैभव-विस्मिताः ।
हिमगिरिवरहीरकमयमुकुटस्तव भासते
सुरसरिदियमुरसि विमलहारस्तव राजते ।। जय०

२

चुम्बति तव चरणाम्बुजमम्बुधिरपि दण्डवत्
कम्बुबहुल-मौक्तिकदल - मणिकदम्बमाददत् ।
प्रणमति तव पादपद्ममम्बरतल - चुम्बिभिः
शतसहस्र-मूर्द्धभिरिव तुङ्गोज्ज्वल-वीचिभिः।।जय०

३

करधृत-नव-पल्लवदल - चामर इव किङ्कर:
मलयशिखरिमरुदभिमुखमर्चति हिमशीकरः ।
चन्दनरस-विन्दुभिरिव किरणैस्तव चन्द्रमाः
स्नपयति वपुरवनीश्वरि! परिचरति च ते रमा ।।जय०

४

अमृतकुम्भ-धन्वन्तरि-धन्य - धवल - वाजिभिः
सहगजेन्द्र-मन्दारक - नन्दनवन - राजिभिः ।
मन्दरगिरि - गुरुमन्थन - दुग्ध-सिन्धुमन्दिरा
दुदगमदियमलसगतिभिरुद्यदिन्दुरिन्दिरा ।। जय०

—साहित्याचार्यश्रीताराचरणभट्टाचार्याणाम्,
वाराणसेयानाम् ।

# भारत-सुषमा

जयति भारतवर्षदेशः

अमर-वीर - यशस्सुमानाम्,
वश्यकर कल - कुंकुमानाम्,
सुरभिभिर्भूखण्डमखिलं मोहयति मदमुग्धवेषः ।
जयति भारतवर्षदेशः ।

यस्य पदकमलं निकामम्,
नव-नृपति-नयनाभिरामम्,
ऊर्मिभिः स्नपयति सुसरलैर्भक्तिनम्रो निम्नगेशः ।
जयति भारतवर्षदेशः ।

आगगनमायस्त - कायः,
हेममण्डित - हिमनिकायः,
उत्तरस्यां यस्य खेलति मुकुटमिव पृथुपर्वतेशः ।
जयति भारतवर्षदेशः ।

सुर-सुलभ-सुषमा - निकेतः,
यत्र हरति न कस्य चेतः,
पावनो गाङ्ग-प्रवाहः सर्वविहस्य विहित-निवेशः ।
जयति भारतवर्षदेशः ।

यत्र बुद्ध-विरक्ति - गीतम्,
गीयते प्रतिगृहमतीतम्,
यत्र कृष्णार्जुन-कथा गीता जयति कर्मोपदेशः ।
जयति भारतवर्षदेशः ।

यत्र रे, राणा प्रतापः,
विहित-रिपुकुल - तीव्रतापः,

विजयि-शिवराज-प्रबल-पदसैन्य-दलबल-चलितशेषः।
जयति भारतवर्षदेशः।

पद्मिनीव वभूव भूतिः,
यत्र राजकुल - प्रसूतिः,
विजयते स्म विजित्य शत्रून् यत्र रे विक्रमनरेशः।
जयति भारतवर्षदेशः।

यत्र कविगुरु-कालिदासः,
यत्र हर्ष कला - विलासः,
यत्र भवभूते र्विभूतेर्भाति करुणालय-विशेषः।
जयति भारतवर्षदेशः।

यत्र तुलसी - सूरदासौ-
अभवतां वाणी-विलासौ,
यत्र मीरा, भारतेन्दुः, भूषणः कविकुलदिनेशः।
जयति भारतवर्षदेशः।

मदन मोहन - मालवीयः,
अजनि जनसेवी यदीयः,
धर्मभारभृतां धुरीणो विहित-नृपनीतिक-गवेषः।
जयति भारतवर्षदेशः।

यस्य गान्धी सूत्रधारः-
स्वर्गतो दिव्यावतारः,
पृच्छति "प्रणयी" कवीन्द्रान्नास्त्ययं कस्माद्विशेषः।
जयति भारतवर्षदेशः।

कविवर्यश्रीरामनाथपाठक"प्रणयि"महोदयानाम्,
आरामण्डलवास्तव्यानाम्।

# वन्दे भारतवर्षम्

गायति निरतं निखिलो लोकः प्रीत्या यस्योत्कर्षम्। वन्दे०
प्रालेयाचल-मुकुट - मण्डितं कश्मीराञ्चित - भालम्,
निर्जरतटिनी-मिहिरकन्यका-विलसितचलगलमालम्,
क्षीणकल्मषं विन्ध्यमध्यमं सन्ध्येऽलङ्कृततोऽलम्,
रणरणकैर्यच्चरणमर्णवः क्षालयते सुविशालम्,
लोकालोक - प्रहरि - राजितं वैरिभ्यो दुर्द्धर्षम्। वन्दे०
आदिसभ्यतास्रोतः सततं सत्याऽहिंसा - युक्तं,
मानवता - निर्मातृ निर्मलं सामगान - संसक्तम्,
भाषा - वर्ण - विचाराणामपि यत्रास्ते वैचित्र्यं,
समता-समरसता - विवेकिता - ख्यातं यत्पावित्र्यम्,
निर्द्वन्दं निरामयं निर्भयं विरलं वीतामर्षम्। वन्दे०
नन्दनवननवसुमैः सुरभितं सस्यं यस्य यशस्यं,
विहगानां कलरुतं वसन्ते मदयति मनः प्रशस्यम्,
पूर्वपश्चिमालिङ्गितमुत्तरदक्षिणदेश - नमस्यं,
दशसु दिक्षु भास्वरतररूपं वन्द्यं विश्ववयस्यम्,
स्वर्णसूत्रवद् ग्रथितं भूमौ वितरतु जगते हर्षम्। वन्दे०

वन्दे भारतवर्षम्।

—श्री शास्त्रिरुद्रदेवत्रिपाठिनाम्,
"मालवमयूर" सम्पादकानां मन्दसौरवासिनाम्।

# जय जननि !

जय जननि भरत - वसुधे विबुध - सेविते
वीरात्म - सन्तान - वृन्दाभिवन्दिते
शिवकलित - कैलासमणि - मुकुट - मण्डिते
गङ्गा तरङ्ग - तरलकाऽलङ्कृते
मलयजसमीर - मृदुपरिरम्भ - पुलकिते
रत्नाकरावद्ध - नवरत्न - मालिके
उपनिषदुदीर्ण - चिन्मन्त्र - परिपाविते
दिव्यर्षिवर्य्यैर्निजसुतैर्भाविते
विसृमर - प्रेमरस - नर्तित - चराचरे
गोविन्दगीतामृते रते शर्म्मदे
कविवरसहस्र - कृत - भवमन्थनान्तरे
जात - सारस्वतसार - सान्द्रान्तरे
परतन्त्रता - तिमिरमुद्भिद्य भासते
स्वातन्त्र्यभानुमान् भूयो नभसि ते
जय जननि सादरं त्वामेव मातरं
वन्दामहे शिवं देवि ! विन्दामहे ।

—एन० गोपाल पिल्लै महोदयानाम्

( केरलीय त्रिवेन्द्रं नगरस्थ - संस्कृतकलाशालाध्यक्षाणाम् )



# वन्दे भारतम्

हिमगिरि – कटितटपट – परिधानम्,
ललित – हरित – कबुंरित–वितानम्,
जलनिधि - जल - सुक्षालित - चरणम्, भारतम्,
वन्दे भारतम् ।

कुसुमावलि – पुलकायित – वेशम्
मणिमण्डित – नीलाम्बर – केशम्
गङ्गा – तुङ्ग - तरङ्ग – निवेशम्, भारतम्,
वन्दे भारतम् ।

कालिदास – कलकण्ठ – निनादम्
वाण – कणाद – सुपूजित – पादम्
मम्मट – कैयट – कोटि - सनादम्, भारतम्,
वन्दे भारतम् ।

आध्यात्मिक – गुरुता–शुचि– शीलम्
सत्य – सनातन–सम्भृत – लीलम्
गीता – गुम्फित – तत्त्व – सनाथम्, भारतम्,
वन्दे भारतम् ।

विष्णु गुप्त – तिलकायित – भालम्
परशुराम – चापायित – मालम्
दुर्जन – दमन – कठोर – करालम्, भारतम्,
वन्दे भारतम् ।

—आयुर्वेदाचार्य श्री कृपाशंकर अवस्थी महोदयानाम्,
"देववाणी" सम्पादकानां, मुंगेरनिवासिनाम् ।

# भारत-प्रशस्तिः

( १ )

वेदभाभासितं सत्कलालासितं
रम्यसङ्गीत - साहित्य - सौहित्यभूः ।
भारती - वल्लकी - झङ्कृतैर्झङ्कृतं
भूतले भाति मेऽनारतं भारतम् ॥

( २ )

जाह्नवी-चन्द्रभागा-जलैः पावितं
भानुजा-नर्मदा-वीचिभिर्लालितम् ।
तुङ्गभद्रा - विपाशादिभिर्भावितं
भूतले भाति मेऽनारतं भारतम् ॥

( ३ )

विन्ध्य-सह्याद्रि-नीलाद्रि-मालान्वितं
शुभ्र-हैमाद्रिहास-प्रभापूरितम् ।
अर्बुदारावली-श्रेणि-सम्पूजितम्
भूतले भाति मेऽनारतं भारतम् ॥

( ४ )

अर्थकामान्वितं धर्ममोक्षान्वितं
भक्तिभावान्वितं ज्ञानकर्मान्वितम् ।
नैकमार्गैः प्रभुं चैकमाराधयद्
भूतले भाति मेऽनारतं भारतम् ॥

( ५ )

संस्कृतं प्राकृतं तामिलं तेलुगुं
कन्नडं केरलीं बांगलामाङ्गलाम् ।
वाचमन्यां च तां तां ब्रुवद् वर्धते
राष्ट्रभाषायुतं मामकं भारतम् ॥

( ६ )

व्यास-वाल्मीकि-रत्नाकरैरुज्ज्वलं
स्वादु - कादम्बरी - पानलुब्धं सदा ।
कालिदासेन भासेन संद्योतितं
भूतले भाति मेऽनारतं भारतम् ॥

( ७ )

यत्र मन्दाकिनी पापसंहारिणी
यत्र गोदावरी चारुसंचारिणो ।
देववाणी च यत्रास्ति मोदाकुला
भूतले भाति तन्मामकं भारतम् ॥

डा० रमाकान्तशुक्लप्रणीतात्
"भाति मे भारतम्" काव्यात् ।

## उदारभारत - वन्दना

वन्दे भारतवर्षमुदारम् ।
वेद-कुरान-वाइविल-जेन्दावेस्ता-विदिताकारम् ।
राम-मुहम्मद-यीशू-जरयुस्त्राहित-धर्माचारम् ॥
हिन्दु-मुसल्मेसाई-परसीकानां परमागारम् ।
विविध-सम्प्रदायाकुलितानां भुक्ति-मुक्ति-सद्द्वारम् ॥
निराकार-साकार-निरीश्वर वादि-वृन्द-परिवारम् ।
संस्कृत-फारस्यंग्रेजी-जेन्दा भाषाभरधारम् ॥
मन्दिर-मस्जिद-गिरजा-ग्यारी-पूजाफलदातारम् ।
कृष्ण-श्वेत-रक्त-पीताङ्गैः "श्रीकर" चेतोहारम् ॥

अयोध्यावासिनां श्रीकालिप्रसादशास्त्रिणाम्

—:०:—

० गीतमयं राष्ट्रीयकाव्यमिदं देववाणी परिषद्, ६ वाणीविहार, दिल्ली इति सङ्केतेन लभ्यते ।

# सैन्य-गीतम्

( लय—कदम कदम बढ़ाये जा···· )

( १ )

सादरं समीयताम्,
वन्दना विधीयताम्,
श्रद्धया स्वमातृभू - समर्चना विधीयताम्, ॥

( २ )

आपदा भवन्तु वा, विद्युतो लसन्तु वा,
आयुधानि भूरिशोऽपि मस्तके पतन्तु वा,
धीरता न हीयताम्,
वीरता विधीयताम,
निर्भयेन चेतसा पदं पुरो निधीयताम् ॥ सादरं०

( ३ )

प्राणदायिनी इयम्, त्राणदायिनी इयम्,
शक्ति - मुक्ति - भुक्तिदा सुधाऽनपायिनी इयम्,
एतदीय — वन्दने,
सेवनेऽभिनन्दने,
साभिमानमात्मनो जीवन प्रदीयताम् ॥ सादरं०

—सम्पादकस्य



# हिमालय-वन्दना

जय जय वीर हिमालय ! बन्दे
देवी - देव - विहार - वनस्थल !
पुण्य - तीर्थशत - सेवित ! निर्मल !
सिद्धि - योगिजन - वन्दित ! अम्बर -
चुम्बि - चारु - शृङ्गालय ! वन्दे
ऋषि - महर्षि - मुनि - संस्तुत - वैभव !
कालिदास कवि - कीर्तित - गौरव !
भारतीयजन - मानस - मन्दिर—
महादेव ! गरिमालय ! वन्दे
मानसरोवर - लहरी - झङ्कृत !
श्री कैलास शिखर - समलङ्कृत !
तिब्बतीय भू - वैभव - भूषित !
वदरीवन - सुषमालय ! वन्दे
तब पदकमलतले नतमस्तक—
मुद्धत रिपु-दलने असिहस्तक—
मद्य वृद्ध - शिशु - युव - युवती जन -
वृन्दमिदं महिमालय ! वन्दे
अप्रमेयबल ! निर्भय ! निर्जर !
शत्रु - सैन्य - दुर्द्धर्ष ! भयंकर !
हीन - चीनजन - पदतल - दूषित-
धूलिमलं प्रक्षालय ! वन्दे
जय जय वीर हिमालय ! वन्दे ।

—सम्पादकस्य

———

# संस्कृतबहुल-भाषापद-निबद्धानि गीतानि

## भारतभूमि–वर्णनम्

अयि भुवन मनो मोहिनी
अयि निर्मल सूर्य करोज्ज्वल धरणो
जनक जननी जननी।

( १ )

नील - सिन्धु - जल - धौत - चरणतल
अनिल - विकम्पित - श्यामल अञ्चल।
अम्बर - चुम्बित - भाल - हिमाचल—
शुभ्र – तुषार – किरीटिनी। अयि भुवन०

( २ )

प्रथम प्रभात उदय तब गगने
प्रथम सामरव तब तपोवने।
प्रथम प्रचारिल तब वनभवने
ज्ञान धर्म कत काव्य काहिनी। अयि भुवन०

( ३ )

चिर कल्याणमयी तुमि धन्य
देश - विदेशे वितरिछ अन्न।
जाह्नवि यमुना विगलित करुणा-
पुण्य पीयूष स्तन्य वाहिनी। अयि भुवन०

—श्री कवीन्द्र रवीन्द्रनाथ टाकुर महोदयानाम्



# भारत-वन्दना

भजे भारतं चारु - शोभाऽभिरामम्
शुभं शाश्वतं भारती - भव्य - धामम्
पदं पैतृकं मातृपीठं ललामम्
सदा संदधेऽहं मुदा पुण्य - नामम् ।

लसत् शुभ्र - हैमाचलं मौलि - भालम्
लुठत्कण्ठ - मंदाकिनी - मंजुमालम्
वृहद्वारिधि - स्निग्ध - कल्लोल - नीरै-
रभिक्षालितं विश्व - वन्द्यांघ्रिनालम् ।

वहु - प्रांतर - प्रान्त - रम्यान्तरालम्
पुर - ग्राम - धामाभिरामं रसालम्
दिगन्तश्रितं वन्य - लावण्य - जालम्
भजेऽहं सदा भारतं श्रीविशालम् ।

सदा सर्व - शांतिप्रदं निर्विषादम्
भव-भ्रान्ति - भावच्छिदं निष्प्रमादम्
सदा निर्वृतं निर्भयं निर्विवादम्
भजे भारतं सर्व - संपूज्य - पादम् ।

—कविवर श्री श्रीधर पाठकानाम्



# भज भारतदेशम्

बालचर ! भज भारत देशम्
भारत देशं भज सविशेषं, त्यज रागद्वेषम्।
बालचर, भज भारत देशम् ।
सहज ललामं, शोभा-धामं, महि-मंडल-भूषम्
बुधवर - वृन्दैः सुरनर - वंद्यैः सुविहित - शुश्रूषम्
बालचर, भज भारत देशम् ।
सुखद-समीरे सुर-सरि-तीरे कानन-घन-कुंजे
दिशि दिशि प्रांते, रम्य प्रशांते, पावनता-पुंजे
बालचर, भज भारत देशम् ।
शुचि हिम-निलये, सुरभित मलये सुहरित-गिरि विन्ध्ये
सुकृत-प्रभूते, प्रकृति-प्रसूते, अविकृत, अविनिन्द्ये
बालचर, भज भारत देशम् ।
भज स्वावश्यं, त्यज आलस्यं, व्रज शुभ-पन्थानम्
त्यज अभिमानं, व्रज म्रियमाणं, भज सेवा-स्थानम्
बालचर, भज भारत देशम् ।
भारत - भाग्यं, गत - वैराग्यं, कुरु स्ववशीभूतम्
भू - साम्राज्यं, कुरु अविभाज्यं, शुचि - सेवा-पूतम्
बालचर, भज भारत देशम् ।

—कविवर श्री श्रीधर पाठकानाम्



# भारतभूमि-वन्दना

वन्दौं श्री भरत-भूमि
सर्व-सेव्य माता !........

चन्दन-सम ताप-हरणि ; शस्य-पूर्ण, श्याम-वरणि ;
विपुल सुजल सुफल धरणि ;
धवल - सुयश - ख्याता....वन्दौं०....

हिमगिरिवर तुंगशृङ्ग ; किरिट मुकुट उत्तमांग ;
युगल - बाहु कच्छ वंग
अभय - वर - प्रदाता....वन्दौं०....

सिन्धु - ब्रह्म - पुत्र देश ; लहरे युग ओर केश ;
बदरी - वन बन सुवेश ;
मदन लखि लजाता....वन्दौं०....

मध्य देश, मद्र देश ; विन्ध्या कटिपट सुवेश ;
उदर वर विदर्भ देश ;
विमल बुद्धि - दाता....वन्दौं०....

सह्य - मलय पाद - पद्म ; सिन्धु - पूजित चरण - युग्म ;
विनत विश्व - मति अनन्य ;
अखिल जगत - माता....वन्दौं०....

—वयं पञ्चाधिकं शतम्

# भारतभू—यशोगीतम्

हिमगिरि हीर किरीट तपोज्वल,
रत्नाकर जल धौत चरणतल,
विन्ध्य मेखला, सरित हार चल,
वन्दे भारतमातरम् !

दक्षिण भू मलयज रज सुरभित,
पश्चिम प्रचुर मधुर फल शोभित,
प्राची श्यामल शस्य भार स्मित,
वन्दे भारतमातरम् !

मधुमें तुम कल कोकिल कुलमें वाणी,
शरत्पद्म दलमें लक्ष्मी कल्याणी,
तुम्हीं अपर्णा हिम दल स्रस्त वनानी,
सकल देवतामयी चतुर्दिक्
वन्दे भारतमातरम् !

शैशव था जगका, तममें लिपटे जन,
वाणीहीन, मुदे थे मनके लोचन,
वेद गान रत रहते गंगा तटपर
उन्मेषित उर, ज्ञान नयन, ऋषि-मुनि गण !
वन्दे भारतमातरम् !

व्यास भणितिमें स्फुरित हुई, माँ, तेरी
निस्तल प्रज्ञाकी आभा अन्तःस्मित,
शंकर मतमें गहन गूढ़ अन्तसकी
तत्त्वग्रहण पटुता जगतीपर कीर्तित,
वन्दे भारतमातरम् !

निखिल भुवन गौरव श्रीकृष्ण चरितमें

चतुर्योगकी क्षमता अद्भुत विकसित,
रामराज्य आदर्श प्रमाण धरापर
उच्च नृपोचित मर्यादाका जीवित!
वन्दे भारतमारतम्!
जिन गुरु पाणि-कमलसे दया द्रवित हो
बहती शुभ्र अहिंसा-धारा पावन,
सौम्य सुगतकी शांत दृष्टि बरसाती
करुणामृत, भव दु:खकर निखिल निवारण,
समताके श्री बशव देव चिर प्रतिनिधि,
महत् त्यागके गुरु गोविन्द निदर्शन
वन्दे भारतमातरम्!
शिव दधीचि कर्णादि महापुरुषोंमें
मा, औदार्य तुम्हारा निश्चल मूर्तित,
हरिश्चन्द्रमें धर्म, सत्य रघुपतिमें,
ध्रुव प्रह्लाद मनस्वी सुत जन पूजित,
चिर अनन्त गुण गरिमासे तुम दीपित,
वन्दे भारतमातरम्!
कन्दमूल ओषधियाँ सकल प्ररोहित,
शब्द-शब्दमें दिव्य मन्त्र उद्गीरित,
निखिल उत्स सरिता गंगा-सी निर्मल,
जीवमात्र इस पुण्यधराके शिव समान अन्त:स्थित,—
वन्दे भारतमातरम्!
नील कलश मंदिर विशाल भू गोलक,
मरकत मूर्ति तुम्हारी जहाँ प्रतिष्ठित,
परिक्रमा-सा करता तुमको घेरे
पश्चात्ताप ग्रसित शशि कल्मष अंकित—
वन्दे भारतमातरम्!

वज्रपात, विष, बह्नि, ध्वंससे तापित,
असुर सम्पदा पीड़ित अब यह भूतल,
तुम अनाथ जन-गणके हित बरसाती
दैवी संपद धन-सी जीवन मङ्गल !
वन्दे भारतमातरम् !

अणु विस्फोटोंसे मर्दित जड़ चेतन—
मृत्यु - भीत, आशंकित, जगतीके जन,
वाणविद्ध मृग-सी सुनती उत्सुक भू
विश्व-शांति सन्देश तुम्हारा मोहन !
वन्दे भारतमातरम् !

हृदय गगनमें बसे तुम्हारी प्रतिमा,
सद्भावोंसे हो अखण्ड जय कीर्तित,
स्तवन करे पश्यन्ती परा गिरा नित
अन्तर्ज्योति करे अहरह नीराजन,
वन्दे भारतमातरम् !

देवि, तुम्हारी महिमा गानेमें रत
मेरी निःस्वर वाणी तुममें हो लय,
पान करें अपलक लोचन स्वर्गिक छवि,
चिन्तनमें निःस्पन्द हृदय हो तन्मय,
शीर्ण काय अर्पित हो तुमपर निर्भय—
वन्दे भारतमातरम्

शस्य हरित, स्वर्णारुण, नीचे ऊपर
चक्रांकित हिम धवल मध्य, दिग चुंबित
नवल राष्ट्र केतन, त्रिपुण्ड-सा नूतन,
त्रिधा धर्म पथ करे प्रकाशित अविजित !
वन्दे भारतमातरम् !

—प्राध्यापक श्री श्रीधर भास्कर वर्णेकरकृतायाः
संस्कृतकवितायाः श्री सुमित्रानन्दनपन्तकृतः अनुवादः ।

## जय गानम्

जय जय जय प्रियभारतजनयित्रि दिव्यधात्रि !
जय जय जय शतसहस्र नर-नारी-हृदय-नेत्रि ! जय०

जय जय सश्यामल सुश्याम चलच्चेलांचका !
जय वसन्तकुसुमलता-ललित चलित चूर्ण कुन्तला !
जय मदीय हृदयाशय लाक्षारुण पद युगला ! जय०

जय दिशान्त गत शकुन्त दिव्य गान परितोषणा !
जय गायक वैतालिक गल विशाल पथ विहरणा !
जय मदीय मधुर गेय चुम्बित सुन्दर चरणा ! जय०

—श्री देवलपल्लि वेंकटकृष्णशास्त्रिणाम्,
( आन्ध्रमहाकवीनाम् )

## वन्दे मातरम्

सुजलां सुफलां मलयजशीतलाम्
शस्य - श्यामलां मातरं० । वन्दे०

शुभ्र-ज्योत्स्ना-पुलकित - यामिनीम्,
फुल्ल-कुसुमित-द्रुमदल - शोभिनीम्
सुहासिनीं सुमधुर भाषिणीम्,
सुखदां वरदां मातरम् । वन्दे०

# भारती–गीतम्

भारती जय विजय करे
कनक - शस्य - कमल धरे !

लंका पदतल - शतदल,
गर्जितोर्भि सागर - जल
धोता शुचि चरण - युगल
स्तवकर बहु अर्थ - भरे !.........

तरु - तृण-वन–लता - वसन,
अञ्चल में खचित सुमन,
गंगा ज्योतिर्जल कण
धवल धार हार गले !.........

मुकुट शुभ्र हिम - तुषार,
प्राण प्रणव ओंकार
ध्वनित दिशायें उदार,
शतमुख शतरव - मुखरे !........

भारति जय....................
कनक - शस्य....................

—महाकवि श्रीसूर्यकान्तत्रिपाठी "निराला" महोदयानाम्"

# भारत-वन्दना

भारत दक्षिण उत्तर वन्दे
पश्चिम पूर्व बृहत्तर वन्दे
पर्वतीय - भू समतल वन्दे
उर्वर विपिन मरुस्थल वन्दे

गिरिवर-मौलि हिमालय वन्दे
विन्ध्य मलय सुषमालय वन्दे
वदरी मानसरोवर वन्दे
श्री कैलास मनोहर वन्दे

गङ्गे यमुने तारिणि वन्दे
कावेरी अघहारिणि वन्दे
गोदावरि गतिदायिनि वन्दे
सिन्धो सुमतिविधायिनि वन्दे

ब्रह्मपुत्र नद - नागर वन्दे
नद - नदीश हे सागर वन्दे
सकल कुण्ड गिरि निर्झर वन्दे
नदी - सिन्धु-संगम सर वन्दे

पुरी द्वारिका मथुरा वन्दे
हरिद्वार श्री मदुरा वन्दे
हे प्रयाग तीर्थेश्वर वन्दे
वाराणसि रामेश्वर वन्दे

कुरुक्षेत्र धर्मस्थल वन्दे
हे चित्तौड़ रणस्थल वन्दे
तक्षशिक्षा नालन्दा वन्दे
नवद्वीप श्री मिथिला वन्दे

मन्दिर शिल्पकलालय वन्दे
मूर्ति शान्ति - शोभालय वन्दे
ज्ञान-पीठ मुनि - आश्रम वन्दे
दुर्ग अजेय - पराक्रम वन्दे

दिव्य अजन्ता गह्वर वन्दे
ताजमहल बहुसुन्दर वन्दे
भव्य भाकरा नङ्गल वन्दे
चितरंजन अतिमंगल वन्दे

ऋषि महर्षि मुनि नायक वन्दे
सुधी सन्त कवि गायक वन्दे
सकल वीर नर-नारी वन्दे
देश-भक्त सुविचारी वन्दे

नगर ग्राम पुर खर्वट वन्दे
मार्ग तीर्थ चत्वर तट वन्दे
लता गुल्म तरु तृण तृण वन्दे
धूलि धूलि अणु कण कण वन्दे

—सम्पादकस्य

## राष्ट्रध्वज—वन्दनम्

वाताम्ब-भूमि - गगनेषु कृत-प्रकाशकम्
व्योम्नि स्फुरन्तमपि चेतसि सन्निविष्टम् ।
आमूल - चूल - मृदुतूल - सुरश्मि-बद्धं
राष्ट्रध्वजं हरिमिवादरणीयमीडे ।

—श्री पण्डितप्रभुदत्तशास्त्रिणाम् ( संस्कृतरत्नाकरतः )

---

मुद्रक—कल्पना प्रेस, रामकटोरा रोड, वाराणी ।

फो० ६३३०२

